यथैकं तीर्थं प्रधानं भवति तदा तीर्थान्तराणि तदङ्गानि वर्ण्यन्ते। यद्यपि सर्वाणि समानानि तथापि श्रद्धाभिवृद्धये प्रधानाङ्गभावो भवति, तद्वत्। अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य। क्षीरं जलं यथा स्वयमेव प्रवहति तद्वत्। विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता, नेतरात्। अवधारणार्थापि वीप्सात्र। उपसर्जनवन्निर्देशादितरेषामुपसर्जनत्वं द्योतयति।

इति साङ्ख्यप्रवचनपरिशिष्टे तृतीयोऽध्यायः॥ ३॥

अथाख्यायिकाभिश्चतुर्थो धर्माध्यायः॥ ४॥

पञ्चमेऽध्याये इतरमतानि दूषयित्वा स्वयशः स्थाप्यते। मङ्गलाचरणं शिष्टाचारात्। यदोङ्कृत्यैव श्रुतयः प्रवृत्ताः। नेश्वराधिष्ठिते फलनिष्पत्तिः, कर्मणा तत्सिद्धेः। जडं हि कर्म प्रकृतिवच्चेतनसहायमपेक्षते। यथेह यजतां घ्नतां वाऽदृष्टानि दृष्ट्वा धर्मराजस्तथाफलैर्जीवान् योजयति, न तु स्वत एव कर्माणि फलदानि, इत्ययौक्तिकी कल्पनात्र भवितुमर्हति। यत्र तु कर्मणां ज्ञाता चेतनो नास्ति गर्भस्थस्य सत्त्वस्य जननीव। यथा सा सत्त्वादृष्टानुरूपा नाहारविहारान् करोति यैः प्रचालितोऽन्तर्मारुतोऽदृष्टानुरूपं कायव्यूहं रचयति। तत्र सर्वज्ञमीश्वरमृते जनन्या बुद्धिं तादृशेष्वेवाहारविहारेषु कः प्रेरयति, तस्मादीश्वरोऽस्त्येव। तथा च श्रुतिः—

प्रजापतिश्चरति गर्भेऽन्तर्जायमानो बहुधा व्यजायत।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वाः॥[1] इति।

एतस्या निर्वचनम्—प्रजानां सन्ततीनां पाता प्रजापतिः। प्रजापतेर्ब्रह्मणः स्थानं नाभिस्तत उद्भूतत्वान्मारुतोऽपि प्रजापतिरित्युच्यते। गर्भस्थाने मत्स्ये चरति, अन्तर्जायमानो गर्भेण सहाप्रसवस्थायी बहुधा तत्तदङ्गरचनानुरूपाकारैर्व्यजायत, तस्य मारुतस्य योनिं धीराः परितः पश्यन्ति। मातृबुद्धिप्रेरकमेव कारणं पश्यन्ति, तस्मिन् विश्वानि भुवनानि तस्थुः। कस्मादिदं ज्ञायते? चतुर्दशभुवनमण्डितो जायमानोऽयं देह एवात्र प्रमाणम्। स्वोपकारात् यद्यधिष्ठाता न स्यात् तर्हि फलयोगाभावेन कोऽपि कर्मणि न प्रवर्त्तेत, क्रीडैवोच्छिद्येत्। न रागादृते तत्सिद्धिः। स्वस्वरूपमाहात्म्यदर्शनेच्छा तु न दोषाय, प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः। अर्थानुकृतयः शब्दाः सादृश्याद्भवन्ति। अनुकरणेनानुकार्यं स्फुटति नानु-

१. शु० यजुः संहिता ३१।१९।

पूर्वीमात्रेणेति स्फोटोऽङ्गीकृतः, न भूतचैतन्यं प्रत्येकादृष्टेः। सांहत्येऽपि च ताम्बूलवच्चेत्, यथा खपुरं नागवल्लीदलानि सुधा कदर एला चैतेषां सङ्घाते जातेऽद्भुतः शोणिमोत्पद्यते तथा भूतसङ्घाते चैतन्यमिति चेत्, न; तत्र तेजसः प्राबल्यात्। तत्रापि खपुरादयः क्रमेणाकाशादीनि भूतानि सुधा तेजसेतरेभ्यो बलवत्त्यस्तीति कृत्वा तस्या रङ्ग इतररङ्गोपमर्दनो रोचते न त्वतिरिक्तस्तदभावे तदभावात्।

इति साङ्ख्यप्रवचनपरिशिष्टे पञ्चमोऽध्यायः ॥ ५ ॥

अथ षष्ठो ज्ञानाध्यायः। अस्त्यात्मा नास्तित्वसाधनाभावात्। नास्तित्वस्यापि ज्ञातास्त्येव। यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः। सच्चिदानन्दमित्यात्मनो रूपं तत्रास्त्यात्मेति सर्वे जानन्ति न कस्याप्यत्र संशयः। एवं चिदंशेऽपि, आनन्दांशे तु सर्वेषां संशयः विस्मृतानन्दा जडेन योगात्। अत एव ब्राह्मणं कुशलं पृच्छेदिति स्मार्तधर्मे न सच्चितोः पृच्छास्ति। अतः परानन्दलब्धये इदं शास्त्रं प्रवृत्तं सैव दुःखात्यन्तनिवृत्तिरित्यनेनाभिहिता भवतीति योऽथ शब्दमादौ प्रयुङ्क्ते तस्येश्वरो नित्यसिद्धः।

इति साङ्ख्यप्रवचनपरिशिष्टे षष्ठोऽध्यायः ॥ ६ ॥

॥ समाप्तः साङ्ख्यतरङ्गः ॥

—:*:—

# साङ्ख्यसूत्रानुक्रमणी

# उद्धरणग्रन्थानुक्रमणी

—:o:—